श्रीमद्वल्लभाचार्य प्रणीत

# श्रीब्रह्मसूत्राणु भाष्य तृतीयाध्याय सानुवाद

मीमांसाद्वितयेऽपि यैर्विरचितं वर्वर्तिभाष्यद्वयं,
येषां कापि सुबोधिनीति विवृतिर्वैयासिकेः सूक्तिषु ।।
ग्रन्थाः सन्ति च यैः कृता सुबहवस्तत्वार्थदीपादय-
स्ते श्रीपुष्टिपथ प्रकाशनपराः श्रीवल्लभार्याइमे ।।

जगद्गुरु

श्रीमद्वल्लभाचार्य वंशावतंस
आचार्यवर्य्य गोस्वामि तिलकायित
श्री १०८ श्री इन्द्रदमनजी (श्री राकेश जी), महाराज

नाथद्वारा

सर्वदाध्यात्मतल्लीनं श्रीमन्तं प्रियदर्शनम् ।
इन्द्रदमनमाचार्यं पीठाध्यक्षं नमाम्यहम् ।।

श्रीनाथद्वारस्थविद्याविलासिगोस्वामि तिलकायित

**श्री १०८ श्री इन्द्रदमनजी, (श्रीराकेश जी) महाराज श्री**

**की**

**आज्ञा से**

श्रीब्रह्मसूत्राणुभाष्य तृतीयाध्याय सानुवाद प्रकाशित

: अनुवादक, संशोधक एवं सम्पादक :

**यदुनन्दन त्रिपाठी श्रीनारायणजी शास्त्री**

साहित्यायुर्वेदाचार्य

एम.ए. हिन्दी, संस्कृत

विद्या विभागाध्यक्ष

मन्दिर मण्डल नाथद्वारा

प्रकाशक श्रीविद्या विभाग, मन्दिर मण्डल, नाथद्वारा

**प्रथम संस्करण :**

प्रति : 500

**धनतेरस**

संवत् : 2070

**न्योछावर**

**११०/- रु.**

।। श्रीहरिः ।।

## सम्पादकीय

श्रीमद्वल्लभाचार्य महाप्रभु ने वेद, श्रीमद्भगवद् गीता ( श्रीकृष्ण वाक्य) ब्रह्मसूत्र, श्रीमद्भागवत (समाधि भाषा) को प्रमाण स्वरूप स्वीकार किया है। वेद की शंका का निवारण श्रीमद् भगवद् गीता से, श्रीभगवद् गीता की शंका का निवारण ब्रह्म सूत्र से और ब्रह्म सूत्र की श्रीभागवत से करने की आज्ञा की है।

'अथातो ब्रह्मजिज्ञासा' ब्रह्म के सम्बन्ध में साधारण जीव की जिज्ञासा होना समीचीन है। इसका समाधान आचार्य श्री ने ब्रह्मसूत्राणु भाष्य में किया है। इस भाष्य में पुष्टि सिद्धान्त और शुद्धाद्वैतदर्शन का मूल विवेचन है। श्रीवल्लभ प्रभु वैश्वानर वाक्पति हैं। इनकी वाणी भगवद् स्वरूप है। इसलिये विशेष समादरणीय है।

ब्रह्मसूत्राणु भाष्य का तृतीयाध्याय सानुवाद पूज्यपाद आचार्यवर्य्य गोस्वामि तिलकायित श्री १०८ श्री इन्द्रदमनजी ( श्रीराकेश जी) महाराज श्री की आज्ञा से विद्या विभाग, मन्दिर मण्डल नाथद्वारा द्वारा प्रकाशित किया है। ग्रन्थ के संशोधन में पूर्ण सावधानी रखने पर भी संभव है अशुद्धि रह गयी होगी क्योंकि –

**जीवस्वभावतो दोषाः सम्भवन्त्येव हि कुत्रचित्।**
**सद्गुण ग्राहिणः सन्तो नैव गृह्णन्ति तान् पुनः।।**

# ॥ अथ तृतीयाध्यायस्य प्रथमः पादः ॥

## १ तदन्तरप्रतिपत्तावित्यधिकरणम् ।

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ३/१/१॥**

सर्वोपनिषदां सिद्धो ह्यविरोधे समन्वयः ।
कथं बोधकता तासां सा तृतीये विचार्यते ॥ ३३॥
एकं वाक्यं प्रकरणं शाखाः सर्वाः सहैव वा ।
एकां विद्यामनेकां वा जनयन्तीति चिन्त्यते ॥३४॥
ससाधने हि पुरुषे जन्मना कर्मणा शुचौ ।
केवले वा यथायोगे प्रथमं तद्विचार्यते ॥३५॥
विचारपूर्वकं तस्य ब्रह्मभावाप्तियोग्यता ।
अधिकारे ततः सिद्धा विषयावधृतिस्ततः ॥३६॥
अन्तरङ्गविचारेण गुणानामुपसंहृतिः ।
बहिरङ्गविचारेण कर्मणामिति सा द्विधा ॥ ३७॥

तस्मादधिकारिणो जन्मनिर्ध्धारः । तदनु तस्य ब्रह्मभावयोग्यता । ततो गुणोपसंहारः । ततोऽङ्गविचार इति ।

तत्र प्रथमे पादे जीवस्य ब्रह्मज्ञानौपयिकं जन्म विचार्यते । तत्र पूर्वजन्मनि निष्कामयज्ञकर्तुर्ज्ञानरहितस्य मरणे ज्ञानाभावेन यज्ञाभिव्यक्त्यभावाद् भूतसंस्कारक एव यज्ञो जात इति निष्कामत्वाच्च तदधिकारिदेवाधीनान्येव भूतानीति ते देवास्तत्र तत्र हुत्वा तस्य शरीरं संपादयन्तीति पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति (छां. ५/३/३) इति श्रुतिः ।

तत्र जीवेन्द्रियाणां होमाभावेनाशुद्धिमाशङ्क्य तेषामपि होमं वक्तुमिदमधिकरणमारभते। नच पञ्चाहुतयो धूममार्ग एव । तत्र गमनागमनयोर्बहुविशेषश्रवणात् । तद्य इत्थं विदूर्ये चेमेरण्ये श्रद्धातप इत्युपासते तेर्चिषमभिसंभवन्ति (छा. ५/३/१०) इति तज्ज्ञानवतोपि यत्रार्चिःप्राप्तिस्तत्र । तथा देवहुतानां कथं सा न स्यात् । ज्ञानार्थमेव च तथोत्पत्तेः । पुनरावृत्तिः परं तुल्या । निष्काम एव धूममार्गः । योगी प्राप्य निवर्तते (भ.८/२५) इति स्मरणात् । भोगार्थमेव धूमादिलोकाः । निष्पत्तिस्तु पञ्चागम्नावेव । अन्ने प्रविष्टानामन्येषामपि रेतोद्धारा योनित उत्पत्तिरिति कपूयचरणवर्णनम् ।

एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते (भ.गी.९/१२) इति कामनायां भिन्न एव प्रकारः । पृथगुपदेशात् । तस्माद्योग्यशरीरनिष्पत्तये स्वयमेव गच्छति भूतसहितः । श्रद्धाहोमानन्तरं सोमभावे वा संबन्ध इति संशयः । भिन्नपक्षे योनौ वेति । तत्र श्रौतेर्थे श्रौतन्यायेनैव निर्णयस्योचितत्त्वादाहुतावपां

गौणत्वापत्तेः । संस्कृतभूतानामपामुपस्थापकत्वाभावाच्छरीरवियोगे देवानां च तावद्विलम्बे कारणाभावाच्च श्रद्धारूपा आप एव हूयन्ते । अतो न तैः परिष्वक्तो गच्छतीत्येवं प्राप्ते ।

उच्यते । तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् । तस्य जीवस्य यज्ञादिकर्तुरन्तरप्रतिपत्तौ अन्तरे मध्ये मुख्यप्रतिपत्तेर्मोक्षलक्षणाया अर्वाग् योग्यशरीरनिष्पत्त्यर्थम्। न हि वस्तुतो यज्ञानामिदं फलं भवति । अतो मुख्ये विलम्बात्प्रतिपत्तिरेषा तस्य मुख्यफलस्य वान्तरे या प्रतिपत्तिस्तदर्थं वा तत्कारणभूतैः संपरिष्वक्त एव रंहति मरणानन्तरमेव कर्मसमाप्तेः । सम्यग्भूतानि तदेवं संस्कृतानि प्रतिदिनसंस्कारार्थं च नैकट्यमपेक्षन्ते । अतः सम्यगेव च परिष्वक्तः । पूर्वं शरीरेण व्यवधानाच्छरीरदाहे वा तद्गतानि भूतसूक्ष्माणि सम्यक् तमेवासक्तानि। तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च (बृ. ४/४/२) इति । जीवपक्षे ज्ञानकर्मणी । कर्मणो हि स्वरुपभूता आपः । तत्र हेतुः प्रश्ननिरुपणाभ्याम् । वेत्थ यथा पञ्चम्यामाहुतावापः

पुरुरुषवचसो भवन्ति (छां. ५/३/३) इति प्रश्नः । असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समित् (छां. ५ /४/१) इति निरुपणम् । प्रश्ने हि पुरुषत्वं वदति न देहमात्रम् । तज्जीवाधिष्ठितानामेव भवति । सिद्धवत्कारवचनाच्च निरुपणेपि चन्द्रो भवतीति । तत्रापि सोमो राजा चेतनः । न ह्यन्याधिष्ठाने ह्यन्यस्य शरीरं भवेत् तथान्नरेतोगर्भाश्च । अन्यथापि विनियोगसंभवात् । जीवसाहित्येप्यपामेव मूख्यत्वम् । शरीरवत् । अयं होमस्तत्र तथा तं जनयन्ति इति न दुःखहेतुः । तस्मात् प्रश्ननिरुपणान्यथानुपपत्त्या परिष्वक्त एव संस्कृतैर्भूतै रंहतीति सिद्धम् ॥ ३/१/१ ॥

त्र्यात्कत्वात्तु भूयस्त्वात् ॥ ३/१/२ ॥

ननु कथं भूतसंस्कारमात्रत्वमवगम्यते यावता प्रश्ननिरुपणाभ्यामाप एवावगम्यन्ते । नच तावन्मात्रसंस्कारकत्वम् । नियामकाभावात् । अस्थि चैव तेन मांसं च यजमानः संस्कुरुते इति विरोधश्चेति शङ्कां निराकरोति तुशब्दः ।

अपामेव ग्रहणेन तेजोबन्नानि गृहीतानि ज्ञातव्यानि । कुतः । त्र्यात्मकत्वात् । लोकादिनिर्माणानन्तरभावित्वात् । ता आपस्त्रिवृत्कृता एव । अतस्त्रयोपि गृहीता अपां ग्रहणेन। उपलक्षणत्वेप्यपामेव ग्रहणे हेत्वन्तरमाह । भूयस्त्वात् शुद्धपामेवेदं शरीरं बहुहेतुकत्वमेव भूयस्त्वम् । बहुधा परिणामाच्च । द्रव्यभूयस्करत्वं च तस्मान्नियामकानां भूयस्त्वादपामेव ग्रहणम् ॥ ३/१/२॥

प्राणगतेश्च ॥ ३/१/३ ॥

वैदिकीं युक्तिमुक्त्वा लौकिकीमाह । प्राणस्य गतिः प्राणगतिः । तमुत्क्रामन्तं प्राणोनूत्क्रामति (बृ.४/४/२) इति प्राणाप्यायनजनकत्वादपाम् । प्राणो गच्छन् स्वाप्यायकं गृहीत्वैव गच्छति । जलौकावदन्यत्र देहसंबन्धः । मुक्तौ न प्राणा गच्छन्ति । क्रममुक्तावपि देहसंबन्ध इति पौराणिकाः । देवभाव इत्यौपनिषदाः । अतो दूरे प्राणगतिरत्रैव । अतोपां

संश्लेषो वक्तव्यः । चकारात् विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च (बृ. ४.४.२) इति स्वकर्मसहभावं बोधयति श्रुतिः । तस्मादद्भिः परिष्वक्तो गच्छति ॥ ३/१/३॥

## अग्न्यादिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३/१/४॥

श्रुतिविरोधं परिहरति । परस्परविरोधे व्यवस्था वा बोध्यते । ननुयत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः (बृ.३/२/१३) इत्यादिनाग्न्यादिमतिः प्राणानां श्रूयते । नच-औषधीर्लोमानि वनस्पतीन्केशाः (बृ.३/२/१३) इत्यत्र प्रत्यक्षविरोधाद् बाधितविषयेयं श्रुतिरिति वाच्यम् । आध्यात्मिकेन्द्रियमध्यपाताल्लोमकेशा अप्याध्यात्मिका एव ग्राह्याः । यैः कण्डूलावण्यप्रतीतिः । दृश्यमानानि तु गोलकस्थानानि । तस्मात्प्राणोत्क्रमणश्रुतिरग्न्यादिभावश्रुत्या बाध्यत इति चेन्न । भाक्तत्वात् । प्रकरणव्यतिरेकेणामुक्तविषये प्रवृत्ता भाक्ता भवति । अथ हैनं जारत्कारव आर्तभागः पप्रच्छ (बृ.३/२/१) इत्यत्र ग्रहनिरूपणानन्तरं मृत्युं दृष्ट्वा म्रियमाणप्रश्ने - नामैव न जहात्यन्यज्जहाति इति प्रतिज्ञाते प्राणोत्क्रमणप्रश्ने नेति प्रतिवचने वागादीनामग्न्यादिभावानुवादः । ततो मन्त्रणाज्जीवस्य ब्रह्मभावोवगम्यते । सामग्र्या गतत्वात्। तौ ह यदूचतुः - इति कर्मप्रशंसा भिन्नप्रश्नोत्तरा । उभयोर्वचनविरोधात् । ब्रह्मविद्या च गोप्या । उत्क्रमणश्रुतिस्तु - स यत्रायँ शारीर आत्मा (बृ.४/३/३५) इति ब्राह्मणे जीवस्यं परलोकविहारार्थं निष्क्रामति चक्षुषो वा मूर्ध्नो वा (बृ.४/४/२) इत्यादिना प्राणानां विहारसाधकानां निर्गमनमाह । अतो मुक्तामुक्तविषयभेदस्य व्यवस्थापकस्य विद्यमानत्वादग्न्यादिभावश्रुतिर्नोत्क्रमणश्रुतिबाधिका ।

तस्मादन्यत्र सिद्धो धर्मोन्यत्रावस्थासाम्याद् योज्यमानो भाक्तो भवति । अतः प्राणोत्क्रमणमस्ति । तस्मात्संपरिष्वक्तो गच्छतीति सिद्धम् ॥ ३/१/४॥

## प्रथमेश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ३/१/५ ॥

किंचिदाशङ्क्य परिहरति । असौ, वाव लोको गौतमाग्निः इत्यत्र देवाः श्रद्धां जुह्वतीति श्रुतेरापो न संकीर्तिताः । अपां हि पञ्चम्यामाहुतौ पुरुषवचनम् । श्रद्धा मनोधर्मः स कथं हूयत इति चेन्न । मनसा सह भविष्यति । तथाप्यरुणान्यायेन धर्ममुख्यत्वम् । तर्हि कथं प्रश्नोपसंहारौ । परोक्षवादाद् भविष्यति । चमसवत् । श्रद्धा वा आपः - इति श्रुतेः । शुद्धिहेतुत्वसाम्यात् । चन्द्रमा मनसो जातः (ऋ.सं.१०/९०/१३) इति श्रुतेश्चेत्येवंपरा भविष्यति । तस्मात्प्रथमाहुतावपामश्रवणान्न ताभिः संपरिष्वक्तो गच्छतीति चेन्न । ता एवाप एव श्रद्धाशब्देनोच्यन्ते । हि युक्तोयमर्थः । यथा कर्मकाण्ड आपः श्रद्धाशब्देनोच्यन्ते तथा प्रकृतेपि । परं नोपचारः । उपपत्तेः । उपक्रमोपसंहारयोर्बलीयस्त्वात् । ननु मध्ये श्रुतेन श्रद्धाशब्देनोपक्रमोपसंहारावन्यथाकर्तुं युक्तौ । श्रद्धासहभावः संस्कारेण संस्कृतेषु भूतेषु सिद्धः। श्रद्धाप्रयोगस्तु कामनाकृतव्यावृत्त्यर्थः । तत्र फल एव श्रद्धा न कर्मणि । यो यच्छ्रद्धः स एव सः (भ.गी.१७/३) इति श्रद्धाया आश्रयस्य विषयभावजनकत्वात् कर्तुः कर्मभावाय श्रद्धाप्रयोगः । ततः संस्कृता आपो यजमानरुपा हूयमाना भवन्तीति सिद्धं भवति । तस्मात् प्रथमेप्यपामास्ति श्रवणम् ॥ ३/१/५॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ३/१/६ ॥

स्थितमेतज्जीवः संपरिष्वक्तो रंहतीति । तत्र विचार्यते । सर्वे जीवाः संपरिष्वक्ता गच्छन्त्याहोस्विज्ज्ञानोपयोगिन इति विमर्शः । तत्र पञ्चाहुतिब्राह्मणेनाधिकारिणः श्रुताः । वेदे हि श्रुतानुसारिणी कल्पना । अतो विशेषस्याश्रुतत्वात् सर्वेषामेव पञ्चाहुतिप्रकार इति चेन्न । इष्टादिकारिणां प्रतीतेः । साधारणपक्षं दूषयति । कुतः । इष्टादिकारिणां प्रतीतेः । इष्टादिकारिणः प्रतीयन्ते । श्रद्धापदेन देवकर्तृत्वेन च । सोमभावसाम्याच्च । इष्टादिकारिणां धूममार्गव्युत्पादने सोमभाव उक्तः । अत्रापि प्रथमाहुतिफलं सोमभाव उच्यते । अतः श्रुतिसाम्यादपीष्टादिकारिणो रंहन्तीति सिद्धम् ॥ ३/१/६॥

## भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ३/१/७ ॥

किंचिद् दूषणं परिहरति । ननु यदि श्रुतिसाम्येन सोमभावादिष्टादिकारिणो रंहन्तीत्युच्यते तदा सोमभावे तेषामप्यनिष्टं श्रूयते । तद्देवानामन्नं तं देवा भक्षयन्ति (छां. ५/१०/४) इति समानश्रुतौ च-आ-प्यायस्वापक्षीयस्वेतेत्येवमेतांस्तत्र भक्षयन्ति (बृ.६/२/१६) इति चन्द्रदृष्टान्तेन ते च भक्ष्यन्ते । ततश्च देवाः स्वान्नं पर्जन्येग्नो कथं जुहुवुः । अतः पञ्चाहुत्यभाव इत्याशङ्क्य परिहरति वाशब्दः । तेषां सोमभावो गौणः । भक्षणं च । प्रकृतेप्यङ्गारत्वाचन्द्रमसः कथमाहुतिफलं भवेत् । सोमभावस्य भाक्तत्वमग्रे निरूपयिष्यामः । इदानीं भक्षणस्य गौणत्वं निरूपयति । अन्नभावे हि मुख्यं भक्षणं भवति । तदन्यस्यान्नभावो नोपपद्यते। ब्रह्मज्ञाने तु भवति । स सर्वं भवति । तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च (बृ.१/४/१०) इति । प्रकृते तु तन्न । अनात्मवित्त्वात् । तथा सति मोक्ष एव भवेत् । अतो भक्षणमपि गौणम् । तथाहि श्रुतिरेव गौणभावं शब्दस्य बोधयति । अथ योन्यां देवतामुपास्ते (बृ.१/४/१०) इत्यत्र यथा पशुशब्दः । एवमत्रापि भक्षणं सहक्रीडनं सेवकभावः । चन्द्रतुल्यापदेशाय तथा वचनम् । तथा सति तेषाममरत्वेन तथा स्तुतिः । चन्द्रस्य भक्षणं तु क्षयादनुमीयते श्रुत्या - प्रथमां पिबते वन्हिः - इत्यादिरूपया । देवानामक्षणं भगवदवयवानामेव । अशनानशने तस्याविरुद्धे । आधिभौतिकानां देवानामशनमेव । तस्माद्भक्षणस्य गौणत्वात्सोमभावे न काचिच्चिन्ता ॥ ३/१/७॥१॥

## २ कृतात्ययाधिकरणम् ।

## कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३/१/८॥

प्रथमाहुतिः सफला विचारिता । द्वितीयां विचारयितुमधिकरणारम्भः । सोमस्य पर्जन्यहोमे वृष्टित्वमिति। सोमादृष्टिभावे रूपरसादीनां हीनतया प्रतीयमानत्वाद्यागस्यावान्तरफलं

तत्रं भुङ्क्त इति निश्चितम् । तत्र संशयः । किं सर्वमिवावान्तरफलं तत्र भुङ्क्ते । आहोस्विदनुशयवान् वृष्टिर्भवतीति । तद्वासनयाग्रिमजन्मनि सदाचारयुक्त एव स्यादिति । आचारहीनं न पुनन्ति वेदाः (व.स्मृ.) इतिं बाधोपलब्धेः । अतो विचार उचितः । तत्रावान्तरफलस्यावशेषेवान्तरफलत्वबाधाज्ज्ञानौपयिकशरीरभावादेव सदाचारसिद्धेः प्रयोजनाभावाच्च निरनुशय एव वृष्टिभावं प्राप्नोतीत्येवं प्राप्ते । उच्यते । कृतात्ययेनुशयवान् कृतस्य सोमभावस्यात्यये नाशे सति अनुशयसवानवान्तरफलसाधकलेशसहित एव वृष्टिभावं प्राप्नोति । कुतः । दृष्टस्मृतिभ्याम् । दृष्टं तावद् भोगसाधकमूलद्रव्यनाशेपि भोगसाधकतादृशदेहवस्त्रादिसहित एव तस्मात्स्थानादपगच्छति । अन्यथा सद्य एव देहपातः स्यात् । अतो यथा लोके सानुशयस्तथात्रापि । स्मृतिश्च - यद्यत्र नः स्वर्ग्यसुखावशेषितं स्विष्टस्य दत्तस्य कृतस्य शोभनम् । तेनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्यद्भजतां शं तनोति (भा.५/२०/२८) इति देवगाथा । अतो ज्ञानौपयिकजन्मानुपशयवत एव भवति । अन्यथा पूर्वजन्मस्मृत्यभावे विषयासक्तिः प्रसज्यते ।

नन्वनुशयसहकृत एव जीवो नाद्भिः परिष्वक्तो भवेदत आह । यथेतम् । यथागतम् । अन्यथा प्रश्ननिरूपणयोर्बाधः स्यात् । तर्हि तावदवान्तरफलसाधकसहितः स्यादत आह । अनेवं च । एवंप्रकारयुक्तागमनं नास्ति । भोगस्य जातत्वात् । चकाराद्वैराग्यसहितोपि । तस्मादनुशयवान् भिन्नप्रकाराद्भिः परिष्वक्तो देवकृपासहितो वृष्टिर्भवतीति ॥३/१/८॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३/१/९ ॥

किंचिदाशङ्क्य परिहरति । ननु नात्रोत्तमजन्मार्थमनुशयोपेक्ष्यते चरणादेव भविष्यति । तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् (छां. ५/१०/७) इत्यादिना यः पूर्वजन्मनि विहिताचरणं करोति स उत्तमं जन्म प्राप्नोति । यस्तु निषिद्धाचरणं करोति स श्वादियोनिं प्राप्नोतीति - साधुकारी साधुर्भवति (बृ. ४/४/५ ) इत्यादिश्रुत्या च प्रतिपाद्यते । प्रकृते तु तस्य रमणीयचरणस्य चरणादेव तस्य सम्यग् जन्म भविष्यति किमनुशयसहभावेनेति

चेत् । न । चरणश्रुतौ या योनिरुक्ता सोपलक्षणार्था । अनेन पूर्वजन्मनि समीचीनं कृतमिति ज्ञापिका । न तु तस्मिञ्जन्मनि समीचीनकरणे नियामिका । अन्यथा ब्राह्मणानां निषिद्धकरणं न स्यात् । तस्मादनुशयोपेक्ष्यते ज्ञानोपयोगार्थमिति कार्ष्णाजिनिराचार्यो मन्यते ।

कार्ष्णाजिनिग्रहणं पञ्चाग्निविद्यायां भिन्नप्रकारत्वज्ञापनार्थम् । तस्मादस्य स्वमते भिन्नत्वान्न शङ्का न चोत्तरम् । नहि पञ्चाग्निविद्यायां पुरुषादन्यभावः संभवति । प्रकरणपरिगृहीता श्रुतिर्नान्यत्र न्यायसंपादिका ॥ ३/१/९॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३/१/१० ॥

नन्वेवं सति चरणश्रुतिरनर्थिका । ज्ञापनायां प्रयोजनाभावात् । अतो विधायकत्वं श्रुतेरिष्टानिष्टफलबोधकश्रुतिवत् । अतः कर्मतारतम्येन फलविधानान्निष्कामकर्मकर्तुर्ज्ञानोपयोगिदेहविधानं भविष्यतीत्यनुशयसहभावो व्यर्थ इति चेन्न । तदपेक्षत्वात् । धूमादिमार्गस्य तस्याः श्रुतेरपेक्षत्वात्काम्येष्टादिकारिणः फलभगोनन्तरमुत्पत्तौ सुखानन्तरं दुःखामिति न्यायेन पापस्यैवोपस्थितत्वादसमीचीनशरीरप्राप्तिर्मा भवत्विति रमणीयानुष्ठातृणां रमणीयशरीरप्राप्तिरेव बोध्यते । न न्यायेनासमीचीनशरीरमिति । तस्मादन्यनिषेधार्थं सार्थकत्वान्नानुशयप्रतिषेधिका ।

किंच । रमणीययोनिः किमाकस्मिकी सकारणा वा । नाद्या वेदवादिनाम् । द्वितीये तु स्वकर्मणा पितृलोक इति वस्वादित्यरूपता च वक्तव्या । प्रजामनु प्रजायन्ते स्मशानान्तक्रियाकृत इति च । त्रैविद्या मां सोमपा (भ.गी. ९/२०) इत्यादिनेन्द्रलोकभोगानन्तरं तथैव पुनर्भवनं च वक्तव्यम् । न च सर्वेषामैक्यम् । भिन्नरूपत्वात्। तस्मात्कर्मकर्तृवैचित्र्येण श्रुतिस्मृतिभेदाः समर्थयितव्या नत्वेकपरत्र निविशते। उपरोधप्रसंगात् । तथा च प्रकृतेप्यनुशयाभावे भक्षणभवनयोर्नियमो न स्यात् । ब्राह्मणादीनामप्यन्ने बलिहरणे श्वचण्डलयोर्भक्षणम् । ब्राह्मणभक्षणेपि मलभावे शूकरभक्षणम् ।

अनुशयस्य नियामकत्वे तुषादिष्वन्नभाव एव यावत् समीचीनरेतोभावः । तस्मादुपलक्षणतैव चरणश्रुतेर्युक्ता । तस्मादनुशयसहित एव वृष्टिभावं प्राप्नोतीति सिद्धम् ॥ ३/१/१०॥

सुकृतदुष्कृते एवेति तु बादरिः ॥ ३/१/११ ॥

फलांश एवानुशय इति तु स्वमतम् । कर्म फलं च द्वयमेवेश्वरेच्छया नियतम् । कर्म पुनर्भगवत्स्वरूपमेव ब्रह्मवादे । सोभिव्यक्तः फलपर्यन्तं तदादिसंयोग इति स्वमतम् । अन्तसंयोगपक्षमाहैकदशित्वज्ञापनाय । सुकृतदुष्कृते एव विहितनिषिद्धकर्मणी अनुशय इति बादरिराचार्यो मन्यते । तेन मोक्षपर्यन्तमनुशयोनुवर्तिष्यत इति सूत्रफलम् । तुशब्देन निरनुशयपक्षशङ्कैव नास्तीत्युक्तम् । एवं द्वितीयाहुतिर्निर्धारिता ॥ ३/१/११//२॥

३ अनिष्टादिकारिणामित्यधिकरणम् ।

अनिष्टादिकारिणामपि च श्रुतम् ॥ ३/१/१२ ॥

तुल्यत्वेन विचार ऐक्ये वा पञ्चाहुतिधूममार्गयोः सोमभावं गतस्य पुनरावृत्त्युपसंहार उपलक्षणेनापि पापाचारवतामुपहसंहारदर्शनात्तेषामप्याहुतिसंबन्धो धूममार्गश्च प्राप्तोति । तन्निराकरणार्थमधिकरणारम्भः । नन्वनिष्टादिकारिणामपि सोमभावः श्रूयते । इष्टादिकारिव्यतिरिक्तानां - ये वैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति (कौ.१/२) इति कौषीतकिनः समामनन्ति । अत्र च कपूयां योनिमापद्यन्त इति पर्यवसानम् । तेन सर्वे चन्द्रमसं गच्छन्ति । अयमाशयः । कर्माकर्मविकर्मेति त्रिविधकर्मविधायको वेदः । अग्निहोत्रं जुहुयात् । यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् । न हिंस्याद् भूतजातानि । ब्राह्मणादीनामपि त्रिविधकरणं सभंवति । न हि सर्वोप्येकान्ततो विहितं वा प्रतिषिद्धं वा करोति । ततो विहितकर्तुरपि त्रयसंभवाज्ज्ञानाभावेन फलभोगनैयत्यात् सोमभावानन्तरमेवाकर्मविकर्मविभागो वक्तव्यः । अत एवाविशेषोपसंहारौ । तस्मात्सोमभावानन्तरमेव सर्वेषां जन्मेति प्राप्तम् ॥ ३/१/१२॥

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ३/१/१३ ॥

तुशब्दः पक्षं व्यावर्तयति । विहितव्यतिरिक्तकर्तृणां संयमने यमसंनिधाने सुखं दुःखं वानुभूयारोहावरोहौ । अनुभवार्थमारोहोनुभूयावरोहः । कुतः । तद्गतिदर्शनात् । तेषां गतिर्विसदृशी दृश्यते । वेद हि प्रथमं विहिता द्वेधा गतिः । सकामा निष्कामा चेति । सकामा यथाकामनन्तविद्या । निष्कामा ज्ञानरहिता द्विविधा वैदिकगृह्यस्मार्तभेदेन । तत्र गृह्यस्मार्ते यमः। श्रौते सोमभावः । तत्र त्रेताग्निविधानेन निष्कामानामदम्भानां पुण्यं स्यादित्याधिकारिविशेषणात् । विशेषतः सामान्यतश्च प्रायश्चित्तविधानात् । यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते (तै.आ.२/८) इति - तरति ब्रह्महत्याम् (तै.सं.५/३/१२) इति च सर्वप्रायश्चित्तविधानात् । ब्रह्मानुभवाभावे सोमगतिरेव ।

पूर्वजन्मधर्मस्य चित्तशुद्धावुपयोगः । तदानीन्तनस्य गङ्गास्नानादेः श्रौताङ्गत्वम् । अतः पापस्याभावात्पुण्यस्योपक्षीणत्वात्तस्य पञ्चाग्निप्रकार एव । ज्ञानोपयोगिजन्मनि पापसंश्लेषाभावोपायमग्रे वक्ष्यति। पितृमेधप्रथमाहुतिमन्त्रस्तु मन्त्रत्वाच्चमसवन्न गतिनियामकः । त्रेताग्निविद्यारहितानां पुण्यपापोपभागो यम एव। वैवस्वते विविच्यन्ते यमे राजनि ते जनाः । ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः ॥ (तै.आ.३/५) इति ।

यमगतेः पञ्चाग्निविद्यायाश्चैषा व्यवस्था । चित्तशुद्धिभावाभावाभ्यां वावश्यं काण्डद्वयव्यवस्था एकस्यैतद् वक्तव्यम् । सकामनिष्कामभेदो वा वेदान्तिनामपि पापार्थं यमापेक्षणात्सा गतिर्वक्तव्यैव । तस्मान्न सर्वेषां सोमगतिः ॥३/१/१३॥

## स्मरन्ति च ॥ ३/१/१४॥

स्मरन्ति व्यासादयः । यमेन पृष्टस्तत्राहं देवदेव जगत्पते । पूर्वं त्वमशुभं भुङ्क्ष्व उताहो नृपते शुभम् इत्यादि । चकाराल्लोकप्रसिद्धिः ॥ ३/१/१४ ॥

## अपि सप्त ॥ ३/१/१५॥

चेत्यनुवर्तते । पापोपभोगार्थं यमालयगमनमङ्गीकर्तव्यम् । यतस्तत्र नरकाः सप्त सन्ति सौरवादयः । सप्तसंख्या संख्याभेदेष्ववरकक्षा । सर्वथा निराकरणाभावाय सप्तग्रहणम् । तस्माद्यमगतिरस्ति ॥ ३/१/१५॥

## तत्रापि च तद्व्यापारादविरोधः ॥ ३/१/१६॥

किंचिदाशङ्क्य परिहरति । ननु नरकेषु चित्रगुप्तादयो भिन्ना एवाधिकारिणः सन्ति । तथा सति तृतीयः पक्षः स्यादत आह । तत्र नरकादिषु येधिकारिणस्ते यमायत्तास्तत्सेवकाः। अतो यमस्यैव तत्रापि व्यापारन्न तृतीयपक्षप्राप्तिः । चकारात्सुखदुःखभोगेपि । तृतीयपक्ष एव विरोधः ।

अथवा यमगतेर्मन्त्रलिङ्गसिद्धे पापस्य च पौराणिकत्वे चन्द्रगतिरेकैव स्यादिति विरोधः। तेषां यमसेवकत्वे तु मन्त्रलिङ्गपोषकत्वान्मार्गद्वयसिद्धेरविरोधः। तस्माद्यमगतिरस्तीति सिद्धम् ॥ ३/१/१६/३॥१०॥

## ४ विद्याकर्मणोरित्यधिकरणम् ।

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३/१/१७ ॥

साधारणत्वाभावाय पूर्वोक्तार्थसाधकमधिकरणमारभते । ननु-ये के चास्माल्लोकात्प्रयान्ति चन्द्रसमेव ते सर्वे गच्छन्ति (कौ.१/२) इत्यस्याः श्रुतेः का गतिः। पञ्चाग्निविद्याप्रस्तावे वा यमगतिः कुतो नोक्ता । तस्माद् वेदविरोधान्न तृतीयपक्षसिद्धिरित्याशङ्कां परिहरति तु शब्दः । अत्र वेदान्ते गौणमुख्यफलदेहार्थं विद्याकर्मणोरेव हेतुत्वेन निरूपणं विद्यया देवयानं कर्मणा सोमभाव इति तयोरेव प्रकृतत्वात् कारणत्वात् । तेन कौषीतकिब्राह्मणेपि प्रकृतत्वात् कर्मिण एव सर्वशब्देनोक्ताः । अत्रापि न यममार्ग उक्तः । तस्माद्विद्याकर्मणोर्मुख्यत्वान्मार्गद्वयमेवोक्तं नैतावता तृतीयबाधः ॥ ३/१/१७॥

## न तृतीये तथशेपलब्धे: ॥ ३/१/१८ ॥

ननु द्वयो: स्तुत्यर्थं यस्तृतीयो मार्ग उक्त: । अथैतयो: पथोर्न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति (छां. ५/१०/८) इत्यादिना जुगुप्सेतेत्यन्तेन तृतीयनिन्दया द्वयो: स्तुतिरिति स एव तृतीयोस्तु किं यममार्गेणेत्यत आह । न तृतीये मार्गे तथा पुण्यपापयोरुपभोग उपलभ्यते । यत: समानब्राह्मणे-कीट: पतङ्गो यदि दन्दशूकम् (बृ.६/२/१६) इति योनौ निर्वृतेर्विद्यमानत्वान्न महापापोपभोग: । नापि कीटादिषु महासुखोपभोग:। एकवाक्यता चोभयोर्युक्ता । यद्यपि महाराजादिराजदण्डादिषु तथोपभोग: संभवति तथापि रम्भादिसंयोग नरके च यथा तथा न संभवति । जडे तु पञ्चम्याहुतिर्भरत एव हीश्वरेच्छया जन्मद्वयमधिकम् । त्रिभिरिति वचनात् । भरतोहमिति प्रतीतेश्च । तत: पूर्ववदस्मरणाद्बाल्यादिवदेव जन्मत्रयम् । तस्माज्जायस्वेत्यादिवैलक्षण्याद‌तिरिक्तो यममार्ग: । पञ्चाहुतिनियमाभावस्तु ज्ञानोपयोगिदेहेप्यंशावतरणे पुष्टिमार्गत्वान्न तत्र दोष: ॥ ३/१/१८॥

## स्मर्यतेपि च लोके ॥ ३/१/१९॥

साधकान्तरमाह । अपि च लोकेपि मूर्च्छादिषु यमलोकगमनसंभाषणपुनरागमनानि स्मर्यन्ते ॥ ३/१/१९ ॥

## दर्शनाच्च ॥ ३/१/२०॥

यमपुरुषा दृश्यन्तेपि कैश्चिदजामिलप्रभृतिभि: । चकारात्तेषां वाक्यादिश्रवणम् । तस्माद्वैवस्वतमार्गे न किमपि बाधकमिति सिद्धम् ॥ ३/१/२०॥४॥

## ५ शब्दावरोधाधिकरणम् ।

## तृतीये शब्दाविरोध: संशोकजस्य ॥ ३/१/२१ ॥

तृतीयामाहुतिं विचारति । तत्र वृष्टेरन्नमिति तृतीयाहुति: सफला । पूर्वद्वयं शब्दैकसमधिगम्यम् । वृष्टेरन्ना मिति साधनफलयो: प्रत्यक्षत्वान्न वृष्टिमात्रेणान्नं भवति

बीजव्यतिरेकेण । बीजस्य हि फलम् । न निमित्तमात्रेण तद्भावो वक्तुं शक्यते । तस्मादसंगतं वृष्टेरन्नामित्याशङ्क्याह । तृतीये शब्दावरोधः । तृतीयाहुतौ शब्देन शब्दसाम्येन कारणभूतस्य जलस्यावरोधो ग्रहणम् । सदेव सोम्येदमग्र आसीत् (छां. ६/२/१) इत्यत्र । तत्तेज ऐक्षत बहु स्यां प्रजायेयेति । तदपोसृजत तस्माद्यत्र क्वच शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते (छां. ६/२/३) इत्यत्र कारणरूपाणां निरूपणे शोकजत्वमापामुक्तम् ।

अग्रेच - तस्माद्यत्र क्वच वर्षति तदेव भूयिष्ठमन्नं भवति (छां. ६/२/४) इति । अतः पञ्चाग्निविद्यायामपि देवहोमात्कारणभूतैव वृष्टिर्जातेति नात्र बीजान्तरापेक्षा । शोकपदेन यदश्वश्रीयत तदजतँ हिरण्यमभवत् (तै.सं.१/५/१) इति सहायः सूचितः । यद्यपि तत्रान्नशब्देन पृथिवी तथाप्यत्र पृथिव्या अग्निसमिद्रूपत्वादन्नमेव । तस्मात्कारणशक्तियुक्ताया वृष्टेरन्नं भवतीति न काप्यनुपपत्तिः ॥ ३/१/२१ ॥

## साभाव्यापत्तिरुपपत्तेः ॥ ३/१/२२॥

किंचिदाशङ्क्य परिहरति । ननु कारणजलरूपवृष्टिरत्र वक्तुं न शक्यते । यतः समानधूममार्गश्रुतौ वृष्टेरन्नभाव ऐक्ये वा - तस्मिन्यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तते यथेमाकाशमित्यादिना तिलभाषा इति जायन्त इत्यन्तेन । तत्र यथेतमित्याकाश एव । आकाशाच्चन्द्रमसमिति पूर्वमुक्तत्वात् आकाशस्य मार्गतैव । वायुर्भूत्वा धूमो भवतीत्यादिषु तत्तद्भावः श्रूयते । ते च विकृताः । तदनन्तरभावित्वाद् वृष्टिरपि विकृतैव । तस्मान्न कारणत्वमित्याशङ्क्य परिहरति । सा वाय्वादिरूपापत्तिराभाव्यापत्तिरेव । वायुवदाभानं मध्ये वायुमण्डलमागच्छन्त्याहुतिर्वायुभवनशब्देनोच्यते । आकृतेरेव पदार्थत्वाद् व्यापत्तिशब्देनोच्यते । आकृतरेव पदार्थत्वाद् व्यापत्तिशब्देन च तेजोभावापन्नस्य जलभावापत्तौ कान्तिनाशान्नाश इवेति द्योतयति । कुतः । उपपत्तेः । तथैवोपपद्यते चित्रतुरगादिषु विकारस्य विकारान्तरापत्तावियमेव व्यवस्था । उपासनायां न तदपि । न च भूत्वाश्रूतेर्बाधः ।

प्रतिनियतपदार्था हि ते । भवनावरोहाभ्यामेव तथा वचनात् । अन्यस्यान्यभावं वदन्ती श्रुतिरेव गौणत्वं वदति । कारणांशभावव्यतिरिक्तस्थले तथैव प्रतीतेः। तस्मात्तदाकृतिमात्रेण न स्वरूपान्यथाभावः ॥ ३/१/२२॥

## नातिचिरेण विशेषात् ॥ ३/१/२३ ॥

उपपत्त्यन्तरमाह । तद्रूपता च नातिचिरेण । न बहुकालं तद्रूपता । कुतः । विशेषात् । अन्नभावापन्नस्यैव बहुकालश्रवणात् । अतो वै खलु दुर्निष्प्रपततरमिति । प्रापतरं प्रपतरं वा । वर्णलोपश्छान्दसः । अतस्तृतीयाहुतौ न चिरेणेत्यायाति । बहुकालस्थितौ हि तद्रूपता । कारणवशोद्देवानां मनुष्यभावात् । भिन्नपक्षे न कोपि दोषः । ऐक्यक्षेपि ज्ञानवतो गृहस्थस्य दुर्लभत्वादेवं वचनम् । तस्माद्वृष्टेरन्नं भवतीति सिद्धम् ॥ ३/१/२३ ॥५॥

## ६ अन्याधिष्ठित इत्यधिकरणम् ।

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३/१/२४॥

चतुर्थ्याहुतिर्विचार्यते । ननु-संसर्गजैः कर्मदोषैर्याति स्थावरतां नरः - इति कथमस्यान्नत्वम् । अपूर्वान्नत्वेपि कण्डनपाकादिषु क्लेशेन जीवस्यापगमात्कथं रेतोभावः । चर्वणौदर्यपाकस्त्वावश्यक एव । न च जीवस्य जडभावो मर्यादाभङ्गप्रसंगात् । तस्मात्कथमन्नस्य रेतोभाव इत्याशङ्क्य परिहरति । अन्याधिष्ठिते वृष्टेरन्नभावसमय एवान्यैर्जीवैरधिष्ठितो व्रीह्यादिस्तस्मिन्नपूर्ववत् तद्भावापत्तिः । अतिथिवत् । पूर्ववैलक्षण्येन वा । कुतः । अभिलापात् । व्रीहियवा ओषधिवनस्पतयास्तिलमाषा इति पूर्ववत्तत्तद्भावमात्रं न वदति। किंतु जगति स्थितव्रीह्यादिभाव एवाभिलप्यते । तथा सति यथान्येषु व्रीह्यादिषु तदधिष्ठातृदेवतया नियुक्ता जीवास्तानात्मत्वेनाभिमन्यन्ते एवमत्रापीति न कोपि दोषः । अधिष्ठाने हि वेदनामरणानन्तरं कृमिभावस्य दृष्टत्वात् । तस्मादन्नस्य रेतोभावो युक्तः ॥ ३/१/२४॥

अशुद्धमिति चेन्न शब्दात् ॥ ३/१/२५॥

किंचिदाशङ्क्य परिहरति । नन्वन्याधिष्ठानेङ्गीक्रियमाणे यातनाजीवानामशुद्धत्वादशुद्धमन्नं स्यात् । तथा च कथं योग्यदेह इति चेन्न । शब्दात् - देवा अन्नं जुह्वति तस्या आहुते रेत: संभवति (छां. ५/७/२) इति देवैराहुतिरूपेण होमवचनाच्छुद्धत्वम् । अन्यस्य हि संस्कारेणैव शुद्धि: । अन्यथा यावज्जीवं का गति: स्यात् तस्मात्संस्कारशब्दाच्छुद्धमेवान्नम् ॥ ३/१/२५ ॥ ६ ॥

७ रेत:सिगधिकरणम् ।

रेत: सिग्योगोथ ॥ ३/१/२६॥

पञ्चमीमाहुतिं विचारयति । ननु कथं पुरुषेन्नहोमाद्रेतोभाव: । बाल्यकौमारवार्द्धकेषु व्यभिचारात् । तारुण्येति न हि सर्वमन्नं रेतो भवति । जातमपि न नियमेन योनौ सिच्यते । नापि देवापेक्षा । पुरुषप्रयत्नस्य विद्यमानत्वादित्याशङ्क्य परिहरति । रेत:सिग्योग: । पुरुषशब्देन पौरुषधर्मवानुच्यते । पौरुषं च देशकालसंनिधानेन मन्त्रवद्रेत:- सेकमार्थ्यम् । न ह्येतत्सार्वजीनं सार्वत्रिकं वा । तदर्थं देवापेक्षा । तथा सति न कोपि व्यभिचार: । कथं पुरुषशब्दमात्रेण च ज्ञायते तत्राह । अथ आनन्तर्यात् । शरीरार्थमेव देवैस्तत्र तत्र होम:कृत: । तत्कथं पञ्चामाहुतावेवान्यथा भवेत् । तस्मादानन्तर्यात्पुरुषाहुतिर्नात्र रेत:सिग्योग: । योगशब्देनात्राप्यन्याधिष्ठानेन रेत:सिग्योगाभाव: ॥ ३/१/२६॥७॥

८ योने: शरीरमित्यधिकरणम् ।

योने: शरीरम् ॥ ३/१/२७॥

हूयमानं निरूप्य फलं निरूपयति । तस्या आहुतेर्गर्भ: संभवतीत्युच्यते । तत्र संदेह: । योनावन्त: स्थितमेव फलं बहिर्निर्गतं वेति । तत्र गर्भशब्देनान्तास्थित एव । शरीरपरत्वे श्रुतिबाध: स्यात् । उपसंहारोप्यग्रे कर्तव्याभावादुपपद्यते । ततश्च षण्मासानन्तरं गर्भे

ज्ञानसंभवाज्जननानन्तरं न गुरूपसत्त्यादि कर्तव्यमित्याशङ्क्य परिहरति । योनेर्निर्गतं शरीरं गर्भशब्देनोच्यते । अग्रेरुत्थितस्यैव फलरूपत्वात् । मध्यभावस्याप्रयोजकत्वात् । मातृपरिपाल्यत्वाय गर्भवचनम् । कलिलादिभावे पुरुषवचनत्वाभावादुपसंहारानुपपत्तिश्च । शरीरशब्देन वैराग्यादियुक्तः सूचितः । न तु स्वयं तदभिमानेन जात इति । तस्माद्योग्यदेहः साधनसहितो ब्रह्मज्ञानार्थं निरूपितः ॥ ३/१/२७ ॥८॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये
तृतीयाध्यायस्य प्रथमः पादः ॥ ३ ।१ ॥

।। श्रीहरिः ।।
।। श्रीकृष्णाय नमः ।।
।। श्रीगोपीजनवल्लभाय नमः ।।
।। श्रीवाक्पति चरणकमलेभ्यो नमः ।।

## । तृतीय अध्याय का प्रथम पाद ।

### तदन्तर प्रतिपत्ताविल्यधिकरण

पहले अध्याय में समस्त उपनिषद् ब्रह्म का प्रतिपादन करते हैं इस तरह समन्वय करने में आया है और दूसरे अविरोध अध्याय में दृढ़ हुआ। अब इन उपनिषदों के संदेह बिना शब्दों का ज्ञान द्वारा ब्रह्म का ज्ञान किस भाँति होता है इसका विचार (इस तीसरे अध्याय में) किया जाता है। (१) ब्रह्म की उपासन सभी वैदिक शाखाओं में से किसी समय एक वाक्य द्वारा अथवा एक प्रकरण द्वारा बतायी गयी है। इस तरह समस्त वाक्यों और प्रकरणों वाली सारी वैदिक शाखाओं में इकट्ठे हुए बिना स्वतन्त्र रीति से अनेक विद्याओं का बोध कराती है। इन सभी का विचार (सर्व वेदान्त प्रत्यय अधिकरण में और इस तीसरे पाद में) किया जाता है। (२) इसलिए जन्म और कर्म से पवित्र और विचार रूप साधन वाले पुरुष को ये सभी वैदिक शाखाएँ विद्या देती है कि पीछे जन्म कर्म की शुद्धि नहीं होने पर भी भगवत्कृपा मिलने वाले पुरुष को देती है। जिस तरह (योग में होता है उसी तरह योग के साधन से ही पापादि का नाश होकर शुद्ध होता है।

दूसरे साधन की आवश्यता नहीं रहती है उसी तरह भगवत्कृपा से ही शुद्धि सिद्ध हो जाती है। दूसरे साधनों की आवश्यकता नहीं रहती है इस प्रकार उत्तम अधिकारी भगवत्कृपा से शुद्ध होता है। मध्यम अधिकारी योग से शुद्ध होता है। इसलिए इन दोनों का विचार करने की आवश्यता नहीं है। परन्तु जो हीन अधिकारी है उनकी शुद्धि किस तरह प्राप्त हो, इसका विचार प्रथम पाद में किया जाता है।)

(३) जीव की अवस्था आदि का विचार करना इसके पश्चात् इस जीव की ब्रह्म भाव मिलने की योग्यता का विचार करना फिर इस जीव को मुक्ति का अधिकार सिद्ध होने पर ब्रह्म के स्वरूप का जो निर्णय हो उसका विचार दूसरे पाद में करने में आया है।

(४) पीछे तीसरे पाद में कर्म ज्ञान और भक्ति मार्गीय उपासना इस अन्तरंग साधन का विचार करके (अलग-अलग उपासनाओं में उपयोगी भगवान् के गुणों का उपसंहार का अलग-अलग उपासनाओं में पृथक्-पृथक् भगवान् के गुणों का जो नियमन इस उपासना में इतने ही गुणों का विचार करना इस प्रकार की व्यवस्था, इसका) विचार किया जाता है। पीछे चौथे पाद में आश्रम आदि तथा यज्ञ, तप, शम, दम आदि बहिरंग साधनों का उपसंहार तथा नित्य कर्मों का नियमन, इस प्रकार उपसंहार का दो तरह से विचार किया जाता है। (५) (इस प्रकार उपनिषद् ब्रह्म प्राप्ति में साधनों को सिद्ध करने के लिये विद्या उत्पन्न करते हैं।) उससे पूर्व पाद में मोक्ष के अधिकारी के जन्म का (निर्णय किया जाता है।) फिर दूसरे पाद में इसके ब्रह्म स्वरूप होने की योग्यता का विचार किया जाता है। फिर तीसरे पाद में ब्रह्म के गुण-धर्मों का उपसंहार किया जाता है। पीछे चौथे पाद में बहिरंग का आश्रय धर्म यज्ञ-तप शम आदि धर्मों का विचार किया गया है। इसमें पहले पाद में जीव को ब्रह्म का ज्ञान मिलने में उपयोगी होने से जन्म का विचार किया है। इसके (१) पूर्व जन्म में निष्काम यज्ञ करने वाले भी ब्रह्म ज्ञान बिना पुरुष के मर जाने के पश्चात् ब्रह्म ज्ञान नहीं होने से यज्ञ का प्राकट्य नहीं होता है। इस कारण यज्ञ स्थूल शरीर में आये भूतों को पृथ्वी, जल, आदि को संस्कारी शुद्ध बनाते हैं। उससे और (२) यज्ञ करने वाले पुरुष निष्काम को उससे यज्ञ को अधिकारी देवों को इन पुरुषों की इन्द्रियाँ अधीन ही बनी रहती है। इस यज्ञ के देव पृथ्वी, जल आदि अग्नि में आहूत है तथा निष्काम यज्ञ करने वाले पुरुष का शरीर सिद्ध करते हैं। इस तरह पाँचवी आहुति में जल पुरुष के नाम वाला होता है। इसलिये कितने ही पुरुषों का आकार लेते हैं। छा.५।३।३। ऐसा श्रुति कहती है।

इसमें जीव और इन्द्रियाँ आहूत नहीं होने से अथवा अशुद्ध रह जाने से इस प्रकार शंका करके यह जीव और इन्द्रियाँ ऐसा कहने के लिये सूत्रकार इस अधिकरण का आरम्भ करते हैं छान्दोग्य उपनिषद् में वर्णित पाँच आहुतियाँ तो धूम मार्ग ही है। ऐसा नहीं है, कारण कि धूममार्ग में जाना तथा आना इन दोनों में अर्चिरादि मार्ग की समानता में बहुत ही अन्तर रहता है। इसमें तो पुरुष इस तरह देह प्राप्त करता है वह ब्रह्म को जानता है और जो पुरुष वन में रहकर श्रद्धा से तपता है इस प्रकार उपासना करता है वह अर्चिमार्ग से जाता है। छा. ५।१०।१। यह श्रुति कहती है कि इस विधान के ज्ञान वाले भी जब अर्चिरादि मार्ग से जाते हैं तब पीछे देवों द्वारा आहूत किये जीव आदि अर्चिरादि मार्ग में क्यों नहीं जा सकते? जायेंगे ही, कारण कि ब्रह्म का ज्ञान मिलने के लिये ही होम द्वारा इन पुरुषों का पुनः जन्म होता है और अर्चिरादि मार्ग में भी पुरुषा भाव तक समान ही आवृत्ति है।

अथवा निष्काम यज्ञ करने वाले का ही धूम मार्ग होता है कारण कि 'योगीप्राप्त' करके भोग-भोग कर पीछे पुनः आता है भ.गी. ८/२५ ऐसा स्मृति कहती है। प्रारब्ध कर्म का भोग करने के लिये ही धूमादि लोक है। उत्तम देह की सिद्धि तो पंचाग्नि उपासना में ही होती है। अपने बुरे कर्मों के लिये अन्न में प्रवेश प्राप्त कर दूसरे जीव भी रेतस्-वीर्य द्वारा योनि में से उत्पन्न होते हैं। इसमें बुरे आचरण वाले पुरुष का वर्णन है यह उपनिषद् में प्रासंगिक है। इस प्रकार वेद के धर्म को पालन करने वाले सकाम पुरुष जाते हैं और आते हैं। भ.गी. ९/२१ इस तरह कामना-वासना हो तो इस प्रकार भिन्न होता है। यज्ञ से स्वर्ग, वहाँ भोग करने के पश्चात् जगत् में पुनः लौटना और पुनः यज्ञ करना, इस प्रकार रीति है कारण कि बृहदारण्यक उपनिषद् में सकाम पुरुष धूम मार्ग से जाता है। इस तरह गीता में बताये प्रमाणानुसार भिन्न-वर्णन है। उससे योग्य शरीर सिद्ध करने के लिये जीव अपने ही भूतों के सहित जाता है कि श्रद्धा मोह करने के पीछे सोम भाव प्राप्त करते हैं। भूतों का सम्बन्ध होता है। इस तरह संशय होता है, अथवा इसमें भी भिन्न पक्ष में सकाम-पक्ष में-पृथ्वी में जाता है। ऐसा संशय होता है। पूर्व पक्षी कहते हैं कि वह प्रत्यक्ष मालुम नहीं होता है वैसे जीव आदि उत्क्रमण श्रुति से ही समझा जा सकता है। उससे इस सम्बन्ध में श्रुति के न्याय प्रमाण से ही कर्म के साथ ही जाता है ऐसा निर्णय करना उचित है। जो भूत के साथ जाता है ऐसा मानने में आता है तो जल की आहुति यह शरीर के संस्कार करती है और ये एक गुण कर्म बन जाता है उससे इसके संस्कार प्राप्त भूतों का कोई लाने वाला नहीं होता इसलिये शरीर अलग होते देवों के विलम्ब करने का कारण नहीं होने से श्रद्धा रूप जल ही का होम होता है। उससे जीव भूतों से उलझ कर नहीं जाता है। इस प्रकार जो पूर्व पक्ष हो तो सिद्धान्ती सूत्रकार नीचे अनुसार उत्तर देते हैं कि

**'तदन्तरप्रति पत्तौ रंहति संपरिष्वक्तः प्रश्ननिरुपणाभ्याम्।।३।१।१।।'**

मरण और मोक्ष प्राप्ति इन दोनों के बीच अन्तराल में। यज्ञादि कर्म करने वाले भी, ज्ञान बिना के जीव सूक्ष्म भूतों से अच्छी रीति से सम्मिलित होकर योग्य शरीर की प्राप्ति के लिये जाता है कारण कि उपनिषद्ों में इस तरह प्रश्न और निरुपण है।

'तस्य' अर्थात् यज्ञादि करने वाले जीव के 'अन्तरप्रति पत्तौ-अन्तरे इसके बीच में मोक्ष रूपी मुख्य फल की प्राप्ति के पहले 'प्रतिपत्तौ', योग्य शरीर उत्पन्न करने के लिये 'प्रतिपत्तौ' शब्द में जो सप्तमी विभक्ति है वह 'तादर्थ्य' के लिये है। वास्तविक रीति से योग्य शरीर उत्पन्न करना

यह यज्ञों का फल नहीं हो सकता उससे भगवान् के प्रादुर्भाव रूपी मुख्य फल में विलम्ब होने से यह प्रतिपत्ति-देह की निष्पत्ति, उत्पत्ति होती है अथवा मोक्ष रुपी मुख्य फल मिले इसके पूर्व योग्य देह मिलने के लिये देह को उत्पन्न करने वाले कारणों-सूक्ष्म भूतों से अच्छी तरह मिलकर यह जीव जाता है कारण कि मरने के पश्चात् ही कर्म समाप्त होते है। मरण के पश्चात् होते पर अग्निहोत्र के समय भूत हमेशा संस्कार के लिये जीव के बहुत नजदीक रहते हैं। अच्छी रीति से सम्मिलित रहे यह आवश्यक है उससे यह जीव भूतों से अच्छी रीति से मिलता है। कारण कि मरण के पहले जीवों का शरीर होने से भूतों को जीव के बहुत ही पास रहने में सम्मिलित होने में मुश्किल पड़ती है अथवा मरण पश्चात् शरीर को जलाया जाता है। तब इस शरीर के सूक्ष्मभूत इस जीव का अच्छी रीति से चिपक जाते हैं और यह अर्थ वाली श्रुति है कि 'विद्या और कर्म ये जीव के पीछे जाते है और पूर्व जन्म की प्रज्ञा-बुद्धि भी पीछे जाती है। बृ. ४/४/२। जीव का होम करने का है इस पक्ष में ज्ञान और कर्म ये जीव के पीछे लगे रहने अर्थात् भूतों से मिले जीव का ही होम करने में आता है कारण कि जल द्रव्य रूप होने से कर्म का स्वरूप भूत है।'

इसमें हेतु-प्रमाण बताते हुए सूत्रकार कहते हैं कि प्रश्ननिरुपणाभ्याम्-प्रश्न और निरुपण है उससे 'तु' जानता है। पाँचवीं आहुति में जल पुरुष कहलाता है ? छा. ५/३/३। इस प्रकार प्रश्न है 'हे गौतम', यह लोक वास्तव में अग्नि है।

सूर्य इसकी समिधा है। छा. ५/२/४/१। इस प्रकार निरुपण है। प्रश्न में वास्तव में पुरुष का निर्देश है। अकेले देह का नहीं है। यह पुरुष जीव से अधिष्ठित हुआ ही भूतों को प्राप्त होता है और 'पुरुष' इस प्रकार सिद्ध की तरह कहा होने से सपरिकर जीव है ऐसा मालूम पड़ता है। निरुपण में भी चन्द्र होता है। इस प्रकार है इसमें भी 'सोम राजा है' छा. ५/४/२। इस प्रकार चेतन पदार्थ है। शरीर में एक का अधिष्ठान हो तो यह दूसरा शरीर नहीं बन सकता है और अन्न रेतस और गर्भ ये तीन अवस्था वाला पुरुष भी होता नहीं है। इसलिये सपरिकर जीव का ही होम प्राप्त होता है। कारण कि अन्न मांसादि होंगे। रेतस् का वृथापात होगा और गर्भ में पात हो। इस प्रकार दूसरी रीति से भी इसका विनियोग होना सम्भव है। जीव भूतों के साथ है तब भी जल ही शरीर की तरह मुख्य है। देवों के द्वारा किया हुआ यह होम वहाँ छटे पर्याय में, ब्रह्म लोक में जाने योग्य भास्वर वर्ण पुरुष को देव उत्पन्न करता है इसलिये होम दुःख का कारण नहीं है उससे प्रश्न और निरुपण-वर्णन दूसरी तरह घटित नहीं होने से जीव संस्कार प्राप्त भूतों से ही मिल जाता है।

### त्र्यात्मकत्वात्तुभूयस्त्वात् ।।३।१।२।।

परन्तु जल के ही ग्रहण से तेज, जल और अन्न का ग्रहण हुआ जानना, कारण कि त्रिवृत्करण के कारण जल (जल, तेज और अन्न ये) तीन तत्त्वों वाला है और इन तीन में से जल का ग्रहण किया कारण कि नियामक हेतु अधिक है।

**शंका**-अरे ! इस श्रुति में मात्र भूतों का संस्कार ही दिखाई पड़ता है कारण कि प्रश्न और निरुपण में (होम से संस्कृत बना।) जल ही मालुम पड़ता है परन्तु सभी भूतों का संस्कार करने वाला कोई नहीं है। जल और तेज अन्न आदि का उपलक्षण है ऐसा मानने के लिये नियामक तत्त्व नहीं और भी 'यजमान हड्डियों और उनके द्वारा मांस का संस्कार करता है। इस वाक्य का विरोध आता है।'

**समाधान**- इस शंका का निराकरण 'तु' शब्द करता है। श्रुति में जल के ग्रहण से ही तेज, जल और अन्न का ग्रहण हुआ है। ऐसा आदि जानना क्यों ? कारण कि जल में जल, तेज और अन्न ये तीन तत्व हैं। लोक आदि की उत्पत्ति के पश्चात् होने से ये जल त्रिवृत्करण के कारण तीन तत्त्वों वाला ही होता है। उससे जल के ग्रहण से तेज, जल और अन्न इन तीन तत्त्वों वाला ही होता है। उपलक्षण एक वस्तु से अन्य वस्तुओं का बोध करना ये उपलक्षण है। इसलिए तीन भूतों में से अच्छा लगे उससे एक भूत का निर्देश चल सकता है। फिर भी जल का ही निर्देश किया है इसका दूसरा कारण सूत्रकार दिखाते हुए कहते हैं कि 'भूयस्त्वात्' अधिक होने से (१) 'जल स्वभाव से पवित्र है 'यह स्मृति का आधार' जल शुद्ध है उससे (२) जल प्राण का पोषक होने से 'दूसरे पोषक तत्त्व से इसका भेद नहीं है इस कारण (३) जल रसमय होने से तेज अन्न का ग्रहण करता है और उससे ये दो के बीच में रहता है (४) और बृहदारण्यक में बताये छटे पर्याय में भास्कर वर्ण पुरुष होने से दीक्षित पुरुष के साथ तुल्यता है तथा प्रकाश रूप है।'

ऐसा आगे कहने का है इससे जल का ग्रहण किया गया है। शुद्धजल का ही यह शरीर

व है और (जल वृष्टि अन्न रेतस्रक्तरुप।) अनेक प्रकार का परिणाम देता है उससे भी जल का भूयस्त्व है। भागवत के छटे स्कन्ध में कहे प्रमाण से द्रव्य को बहुत वरदान मिले होने से द्रव्य की अधिकता करने वाला है। उससे भी भूयस्त्व है। उससे नियामक तत्त्व बहुत होने से जल का ही ग्रहण करने में आया है।

## प्राणगतेश्च ।३/१/३।

और प्राण की गति है उससे (जीव भूतों से समाविष्ट हो जाता है।) (पीछे के सूत्र में सूत्रकार) वैदिक युक्ति बताकर यह लौकिक युक्ति कहते हैं। प्राण की गति यह प्राण की गति के कारण जीव जब देह में से जाता है तब प्राण इसके पीछे देह में से जाता है बृ. ४/४/२। इस प्रकार जल प्राण का पोषण करने वाला है। (जल प्राण को संतोष देने वाला है उससे प्राण देह में से जाते समय यह जल आदि को लेकर ही जाता है इस तरह) प्राण देह में से जाते समय अपने पोषण देने वाले जल खाने आदि को लेकर जाता है। उसी तरह प्राण देह में से जाते समय अपने पोषण करने वाली वस्तु को लेकर ही जाती है। (पूर्व प्रज्ञ के साथ उत्क्रमण हो तब) जलौ का जल की तरह जीव का दूसरे स्थान पर सम्बन्ध होता है। सद्योमुक्ति में भी प्राण देह में से उत्क्रमण करता नहीं है। क्रम मुक्ति में भी प्राण का देह के साथ सम्बन्ध होता है इस प्रकार शुकदेव जी जैसे पौराणिक आचार्य कहते हैं। प्राण देव बनते हैं ऐसा उपनिषद् के आचार्य कहते हैं उससे इस ही प्रकार में प्राण की गति दूर होती है उससे जल का सम्बन्ध कहना चाहिये। सूत्र में जो 'च' है उसका अर्थ यह है कि 'विद्या और कर्म' और पूर्व प्रज्ञा, इसको उत्पन्न करती है। बृ. ४/४/२। यह श्रुति अपने कर्म का सहभाव के साथ रहना यह दिखाया है। उससे जीव जल से मिल कर जाता है।

## अग्न्यादि श्रुतेरिति चेन्नभाक्तत्वात्।।३/१/४।।

(मरण प्राप्त पुरुष के प्राण) अग्नि आदि में जाते हैं। इस प्रकार श्रुतियाँ का बोध होता है इस तरह जो कहते हो तो नहीं, कारण कि यह गौण है।

(प्राणोत्क्रमण में) जो श्रुति का विरोध आता है उसका सूत्रकार परिहार करते हैं अथवा परस्पर विरोध आये तब व्यवस्था करनी। यह (सूत्र में) बताया गया है।

**शंका** - 'जैसे' यह पुरुष मरण प्राप्त करता है वहाँ इसकी इन्द्रियाँ अग्नि में लय होती है। प्राण वायु में लय होता है। बृ. ३/२/१३ इत्यादि श्रुति में प्राण इन्द्रियाँ अग्नि आदि में लय होती है। ऐसा सुना जाता है। लोमो-रोंगटें-औषधियों में लय होते हैं। केश वनस्पतियों में लय होते हैं। बृ. ३/२/१३ इस श्रुति में प्रत्यक्षता का विरोध होने से इस ऊपर की बतायी श्रुति का विषय बाधित होता है - ऐसा नहीं कहना कारण कि लोम और केश भी आध्यात्मिक इन्द्रियों के मध्य में होने से आध्यात्मिक ही है और इनका यहाँ ही ग्रहण किया है इससे ही खुजली सुख-खुजाने का सुख

मालुम होता है। जो लोम और केश दिखते हैं वे तो गोलक रूप है उससे अग्न्यादि भाव की श्रुति से प्राणोत्क्रमण की श्रुति का बाध होता है। (समाधान)-ऐसा जो कहते हो तो नहीं, कारण कि यह गौण है प्रकरण से अलग रीति से जो जीव मुक्त नहीं हुए उनके विषय में प्रवृत्त हुई श्रुति गौण बनती है। पीछे जरत्कारव आर्तभाग याज्ञवल्क्य ने पूछा बृ. ३/२/१। इस श्रुति में ग्रह का वर्णन करने के पश्चात् मृत्यु के सम्बन्ध में प्रश्न पूछकर जो मरने की तैयारी ऊपर है उसके विषय में जब प्रश्न किया गया तब याज्ञवल्क्य ने उत्तर दिया कि केवल नाम का ही त्याग करता नहीं दूसरे सभी मरण चाहने वाले पुरुष का त्याग करते हैं कि नहीं, इस विषय में जब प्रश्न किया गया तब याज्ञवल्क्य ने उत्तर दिया कि नहीं, पीछे श्रुति में वाक् आदि इन्द्रियाँ अग्नि आदि रूप में होकर ऐसा अनुवाद पुनः करने को कहा गया है, बृ. ३/२/१३ पश्चात् याज्ञवल्क्य और आर्तभाग एकान्त में जो चर्चा करते हैं उससे मालुम पड़ता है कि जीव ब्रह्म होता है कारण कि सांसारिक भोग सामग्री चली गयी है। नाश हो गई है। इन दोनों याज्ञवल्क्य और आर्तभाग ने वास्तव में ही जो बोला बृ. ३/२/१३ इस श्रुति में जो कर्म की प्रशंसा है उसमें प्रश्न और उत्तर भिन्न है। (जीव ब्रह्म होता है इस विषय में मिलाये गये इस श्रुति वाक्य का सम्बन्ध नहीं है परन्तु इसका विषय पृथक् है) कारण कि दोनों के बीच में विरोध आता है। ब्रह्म विद्या तो गुप्त रखने जैसी है। (इस कारण इसका स्पष्ट वर्णन नहीं किया गया है। इससे 'तौ ह यदूचतुः बृ. ३/२/१३ इस वाक्य में मुक्ति के विषय में वर्णन है ऐसा ज्ञात होता है।) इन्द्रियादि उत्क्रमण का वर्णन करने वाली श्रुति तो 'जैसे यह शरीर आत्मा' बृ. ४/३/१ इस ब्राह्मण भाग में जीव के परलोक के विहार के लिये 'यह आत्मा चक्षु में से अथवा मस्तक में से (मरते समय शरीर में से बाहर) जाती है। बृ. ४/४/२' इत्यादि श्रुति में याज्ञवल्क्य ने विहार करने वाले प्राणों के चले जाने की बात कही उससे मुक्त जीव और अमृत जीव ये दो विषयों से अलग है और श्रुति के प्रकरण से व्यवस्था करने वाला है उससे अग्न्यादि भाव श्रुति उत्क्रमण श्रुतिका बाध नहीं करती है। उससे एक स्थान पर सिद्ध हुआ धर्म दूसरे स्थान पर समान व्यवस्था के लिये लगाने में आये तो यह धर्म गौण बनता है उससे प्राणों का उत्क्रमण है उससे यह सम्मिलित होकर जीव जाता है, यह सिद्ध हुआ है।

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ।३/१/५।**

प्रथम आहुति में का श्रवण नहीं होता है इसलिये (जल से मिला हुआ जीव नहीं जाता है।) ऐसा जो कहते हो तो नहीं यही जल श्रद्धा शब्द से कहा गया है। कारण कि इस प्रकार घटित

है यह सिद्ध हुआ है। यह थोड़ी शंका कर के सूत्रकार इसका परिहार करते हैं। शंका-हे गौतम! यह लोक वास्तव में अग्नि है। छा. ५/४/१। इस श्रुति में देवता श्रद्धा को होमते हैं। छा. ५/४/२। ऐसा श्रवण होने से जल का कथन नहीं है। जल तो पाँचवीं आहुति में पुरुष के नाम वाला होता है यह मन का धर्म है। इस धर्म को किस प्रकार आहुति दी जाय ? इस प्रकार जो कहा जाता है तो समाधान नहीं, श्रद्धा का होम, मन के साथ होगा। ऐसा होने पर भी अरुणा न्याय से धर्म मुख्य है। अरुण लाल गाय द्वारा सोम को क्रय करता है इस श्रुति में गाय का लाल रंग यह विशेषण है और उससे गाय के विषय में यह गौण होना चाहिये। परन्तु ऐसा नहीं है 'लाल' इस शब्द में बताई लालत्व मुख्य है यह अरुणा न्याय कहलाता है। **शंका** - नहीं तो फिर जल का निर्देश करने वाले प्रश्न तथा उपसंहार किस प्रकार घट सकता है ? **समाधान** - परोक्षवाद से घट सकता है। चमस की तरह कारण कि 'श्रद्धा वास्तव में जल है' तै. ब्रा. ३/२/४ जो यज्ञ में चमस आदि शब्दों द्वारा परोक्षवादी से गौणी वृत्ति द्वारा शिरस् आदि कहा गया है उसी तरह 'श्रद्धा जो जल है इस श्रुति में शुद्धि का हेतु - कारण-समान होने से जलशब्द द्वारा श्रद्धा कहलाती है और 'चन्द्रमा मन में से उत्पन्न हुआ' ऋ. वे. १०/९० तै. आ. ३/१२/६ । इस प्रकार श्रुति के होने से इस आहुति में से सोम राजा उत्पन्न होता है। यह श्रुति छा. ५/४/२। अनुकूल होगी (इसका विरोध नहीं होगा अपनी श्रुति में जल का अर्थ श्रद्धा किया है तथा यहीं पर दूसरी श्रुति में सोम को श्रद्धा का परिणाम कहा है इस तरह विरोध होता था परन्तु यह नहीं आया है। दूसरी श्रुति अनुकूल होगी) उससे प्रथम आहुति में जल का श्रवण नहीं होने से जीव जल से नहीं मिलता है।

**समाधान**- इस प्रकार जो तुम कहते हो तो नहीं, श्रद्धा शब्द से जल का ही कथन है। सूत्र में आये 'हि' का अर्थ यह है कि यह अर्थ योग्य है। जिस तरह कर्म काण्ड में श्रद्धा शब्द से जल का कथन होता है। उस तरह प्रकृत जिसका विचार करना चाहिए उस विषय में भी समझना, परन्तु इसमें उपचार-गौण अर्थ नहीं है कारण कि यह घटित है। उपक्रम और उपसंहार अधिक बलवान है श्रुति वाक्य के मध्य में आये श्रद्धा शब्द से आरम्भ तथा अन्त का दूसरा अर्थ करना यह ठीक नहीं है। (नित्य अग्नि हो त्रादि में होम रूप) संस्कार द्वारा संस्कृत हुए भूतों में श्रद्धा को सहभाव के साथ होना यह साहचर्य पहले से ही सिद्ध है। इन तीन हेतुओं से सिद्ध हुआ कि मन को जल ही कहना चाहिये। 'चन्द्रमा मन से उत्पन्न हुआ' ऋ.वे. १०/९०/१३ इस श्रुति में तो अलग सृष्टि है। श्रद्धा शब्द का जो प्रयोग किया गया है वह तो कामना से वासना से, किये कर्मों को दूर करने के लिये है। वहाँ तो-सकाम कर्म करने वालों में तो फल में ही श्रद्धा होती है कर्म

में नहीं होती है। जिसकी जिसमें श्रद्धा होती है वह वही होता है। भ. गीता. १७/३ इसमें श्रद्धा का आश्रय जो पुरुष करता है वह श्रद्धा का विषय उत्पन्न करता है। उससे कर्ता कर्म होता है। यह दिखाने के लिये श्रद्धा शब्द का प्रयोग करता है। (निष्काम पुरुष को कर्म में ही श्रद्धा होने से यह कर्मात्मक होता है।) यह बताने के लिये श्रद्धा शब्द का प्रयोग किया गया है यह तात्पर्य है। उससे संस्कृत हुआ जल-यज मान रूप से होमने में आता है। ऐसा सिद्ध हुआ उससे पहली आहुति में भी जल का श्रवण है।

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ।३/१/६।**

(पंचाहुति ब्राह्मण में अधिकारियों का) श्रवण नहीं है उससे सभी कोटि पंचाहुति का प्रकार रहेगा। ऐसा जो कहते हो तो नहीं, कारण कि इष्ट-यज्ञ करने वालों की प्रतीति होती है ऐसा देखा जाता है। जीवभूत आदि से बराबर मिल कर जाता है। ऐसा सिद्ध हुआ। इसमें अब विचार करते हैं। सभी जीव सूक्ष्म भूतों से मिल कर जाते हैं कि केवल ज्ञानोपयोगी जीव ही जाते हैं इसका विचार करना है। इसमें पूर्व पक्षी कहते हैं कि पंचाहुति-भूतों से ब्राह्मण में अधिकारियों का श्रवण नहीं है वेद में तो वस्तुतः जैसा कहा गया है उस प्रकार कल्पना आवश्यक है। उससे (भूतो से) मिलकर कौन-कौन जाते हैं इस विषय में अमुक अधिकारी जाते हैं ऐसा विशिष्ट नियम श्रुति में दिखता नहीं है। इसलिये सभी जीवों को पंचाहुति प्रकार प्राप्त होता है। ऐसा जो तुम (पूर्व पक्षी) कहते हो तो (सिद्धान्ती) कहते हैं कि नहीं कारण कि वहाँ यज्ञ करने वाले दिखते हैं। सभी जाते हैं इस पूर्व पक्षी के मत का परिहार सूत्रकार करते हैं क्यों? यज्ञ करने वालों की प्रतीति है उससे वहाँ यज्ञ आदि करने वाले दिखते हैं और श्रुति में 'श्रद्धा' पद है उससे और प्रत्युपकार के लिये होम करते हैं। उससे और धूम मार्ग में तथा पंचाग्नि विद्या में एक ही विषय कहा गया है कि आहुतियों में से सोम राजा उत्पन्न होता है। इसलिए सोम भाव में साम्य है उससे पंचाग्नि प्रकार में यज्ञ करने वालों का ही अधिकार है। सभी का नहीं है। यज्ञादि करने वालों की धर्म मार्ग का वर्णन करते सोम भाव कहा गया है। उसके समान श्रुति होने से भी यज्ञ करने वाले सूक्ष्म भूतों से सम्मिलित होकर जाते हैं ऐसा सिद्ध हुआ।

**भाक्तं वानात्मवित्वात्तथा हि दर्शयति।१३/१/७।**

अथवा (यज्ञ करने वालों का सोमभाव और देवों का अशन) गौण है, कारण कि इनको

आत्मज्ञान नहीं है ऐसा श्रुति कहती है। सूत्रकार थोड़े से दूषण का परिहार करते हैं। **शंका**- दो श्रुतियाँ तुल्य है और उससे सोमभाव होने से यज्ञादि करने वाले जाते हैं ऐसा कहा जाय तो सोमभाव में उनका भी अनिष्ट श्रवण होता है और ये सोम रूपी द्रव्य देवों का अन्न है इसका देवता भक्षण करते हैं। छा. ५/१०/४ इसके जैसी श्रुति में 'जिस प्रकार यज्ञ में ऋत्विज चमस में रहे सोम में जल डालकर बढ़ाकर (भक्षण द्वारा) अपक्षय करके ये इसका भक्षण करते हैं। बृ. ६/२/१६ इसमें चन्द्रमा के दृष्टान्त से उसका भक्षण करते हैं पश्चात् देवता इसका अपने अन्न को पर्जन्य-अग्नि में किस भाँति होम किया? उससे पंचाहुति नहीं है इस तरह शंका करके-**समाधान**। सूत्र का 'वा' शब्द इसकी शंका को दूर करता है। देवों का सोमभाव उसका भक्षण गौण है। अपने चलते विषय में भी अंगारे होने से चन्द्रमा किस भाँति आहुति का फल हो सकता है ? सोम भाव गौण है इस प्रकार आगे ऊपर निरुपण करूँगा। इस समय सूत्रकार भक्षण गौण है इस प्रकार निरुपण करते हैं। अन्न भाव हो तो मुख्य भक्षण होता है -ब्रह्म ज्ञानी से अन्य का (जो ब्रह्म ज्ञानी नहीं) उनका अन्न भाव घटता नहीं है किन्तु ब्रह्म ज्ञान होने पर यह अन्न भाव होता है। 'यह सर्व होता है' बृ. ९/४/१० इसको देखकर वामदेव ऋषि बोले 'मैं' मनु हुआ सूर्य हुआ बृ. १/४/१० अपने चलते विषय में तो ऐसा नहीं है कारण कि इस प्रकार आत्मा को जानने वाले नहीं है, आत्मा का ज्ञान मिले तो तभी मोक्ष हो उससे देवों का भक्षण भी गौण है इस प्रकार श्रुति ही शब्द का गौण भाव दर्शाती है। अब जो दूसरे देवता की उपासना करते है बृ. १/४/१० इस श्रुति में 'पशु' शब्द है और इस पशु की समानता दिखाये जाने से गौण है। इसलिये यही देवों का भक्षण है साथ में क्रीड़ा करते हैं। सेवक भाव है उससे गौण अर्थ में भक्षण शब्द उपयुक्त प्रयुक्त हुआ है। चन्द्र के समान है यह बताने के लिये गौण वचन है। ऐसा होने से ये अमर होते हैं। इस प्रकार स्तुति है - चन्द्र का भक्षण होता है। इसका तो क्षय होने से अनुमान होता है और चन्द्र की प्रथम कला को अग्नि पीती है। हेमाद्रिकृत काल माधव, तिथि निर्णय पृष्ठ ९९ इस प्रकार की श्रुति से भी मालुम होता है। कृष्ण पक्ष में चन्द्र की कलाओं का देवता भक्षण करते हैं उससे चन्द्र का क्षय होता है कलाओं' पर्याय पीतस्य सुरैर्हिमांशो : रघुवंश ५/१६ देवता भक्षण नहीं करते हैं यही वर्णन है। ये तो भगवान् के अवयव रूप देवों के साथ ही है। ब्रह्म विरुद्ध धर्मों वाला होने से इसमें अनशन घटता है ये दोनों विरुद्ध नहीं है जो आधिभौतिक देवता है उनका तो अशन-भोजन है ही, उससे भक्षण गौण होने से इनका सोम भाव के सम्बन्ध में थोड़ी भी चिन्ता नहीं है।'

## कृतात्ययइत्यधिकरण

## कृतात्ययेऽनुशयवान दृष्टस्मृतिभ्यां यथेतमनेवं च।३/१/८।

हुए (सोमभाव) नाश होने पर अवान्तर फल साधने वाले थोड़े भाग-थोड़े के साथ ही वृष्टि भाव प्राप्त करते हैं कारण कि (इस प्रकार) साधन दिखाई भी पड़ता है और स्मृति है और जिस प्रकार जाने का, उस प्रकार आने का भी यह प्रकार नहीं है। प्रथम आहुति का फल सहित विचार किया गया। दूसरा आहुति का विचार करने के लिये यह अधिकरण आरम्भ हुआ है कि सोम पर्जन्य होम में वृष्टि होती है। सोम में से वृष्टि होते रूपरस आदि गम्भीर नहीं मालुम पड़ते हैं। उससे याग का अवान्तर फल वहाँ भोगते हैं ऐसा निश्चय हुआ।

**शंका**- इसमें अब संशय होता है कि समस्त अवान्तर फल वहाँ भोगते हैं कि अनुशय अल्प, थोड़े भाग के साथ वृष्टि होती है ? सद्वासना के पीछे के जन्म में मनुष्य सदाचार वाला ही होता है और 'आचार बिना के पुरुष को वेद-पवित्र नहीं करते हैं। व. स्मृ. ६/३ इस तरह बाधा दिखायी पड़ती है उससे इस प्रश्न का विचार करना ठीक है।'

**पूर्वपक्ष**- इसमें अवान्तर फल शेष रहा है इसलिये अवान्तर फल का बाध उसमें आयेगा और ज्ञानोपयोगी शरीर होने से ही सदाचार सिद्ध होगा। इसलिये प्रयोजन नहीं रहेगा। अनुशय-थोड़े भाग-बिना ही यह वृष्टि रूप होगा।

**सिद्धान्त**- इस प्रकार जो कहा गया है तो कहना चाहिये कि 'कृतात्ययेऽनुशयवान्कृत' इसलिये किया हुआ वह अर्थात् सोमभाव उसका अत्यय अर्थात् नाश होने पर 'अनुशयवान्' अर्थात् अवान्तर फल को साधने वाले लेशअंश भाग के साथ ही जीव वृष्टि बनता है क्यों? 'दृष्टस्मृतिभ्याम्' दृष्ट अर्थात् देखे गये विषय ये है कि भोग साधने वाला मूल द्रव्य का नाश होता है परन्तु भोग साधक ऐसे देह वस्त्र आदि के साथ ही जीव इस स्थान में से जाता है। यदि ऐसा नहीं हो तो शीघ्र देह का पात हो जाय उससे जिस प्रकार लोक में अनुशय वाला होता है। उसी प्रकार यहाँ पर समझना। स्मृति भी इस तरह ही कहती है। हमें तो इस स्वर्ग के सुख को भोगना चाहिए। उसमें से ही हमारे द्वारा कितने ही किये उत्तम यज्ञों का शास्त्राभ्यास और दूसरे कोई कर्म का पुण्य शेष रहा हो तो इस पुण्य से हमारा जन्म भारत वर्ष में हो और उसी से यहाँ पर भगवान् का हमें स्मरण रहे। भाग. ५/१९/१८ इस प्रकार देवता गान करते हैं उससे अनुशय वाला ज्ञानोपयोगी का जन्म होता है। ऐसा यदि नहीं हो तो पूर्व जन्म का स्मरण नहीं हो तथा विषयों में आसक्ति का प्रसंग आया है।

